# महामुद्रासिद्धिः

सं. बद्रीरत्न वज्राचार्य

*पिकाक:*

अष्टमुनि वज्राचार्य

| | |
|---|---|
| सम्पादन | बद्रीरत्न वज्राचार्य<br>मन्त्रसिद्धि महाविहार,<br>सवलबाहा:, यें । |
| पिकाक | अष्टमुनि वज्राचार्य<br>लगंबाहा:, यें । |
| पिथना तिथि | ११२१ कछलाथ्व, मुख:अष्टमी |

न्हापां खुसी (१००० गू) द्व:छिगू

मू

| | |
|---|---|
| आख: | माधव खरेल |
| थाकू | बी.एस्. प्रि. प्रेस, लगंदलाछि, यें । |

# छ्वाःच्वा खँ

जि यःपिं शिष्यपिनि निरामयोग यायेगु तसकं इच्छा याना: अध्येषणा याना: 'योग कायेगु इच्छा जुल' धका: धा:वल। इच्छा जूपिं शिष्यपिन्त बिइगु जुल धका: निराम योग शास्त्रानुकूल नियमानुसारं निराम योग बियागु जुल।

निराम योगया मूल उद्देश्य महामुद्रासिद्धि खत। ध्वयात अर्थकथं धायेगु जूसा 'यावन्तः .....' धयागु श्लोक बियागु दु। महामुद्राया व्याख्या वहे जुल। हानं बांलाक हे सीकेगु इच्छा जुल धा:सा अज्या:गु इच्छा या:पिं शिष्यपिनि लागि व सकलसिगु नं लागि महामुद्रासिद्धि धयागु सफू स्वया: च्वया। तर ध्व महामुद्रासिद्धि धयागु श्री कुद्दालपाद कृति वसपोलं हे च्व:गु दुर्लभ बौद्ध ग्रन्थ सोध योजना केन्द्रीय उच्च तिब्बती शिक्षा संस्थान सारनाथं वाराणशी 'गुह्यादि-अष्टसिद्धि संग्रह' धका: प्रकाशन जूगु सफुतिं क्या: ध्व सफू छापय् याके बिया: प्रदान याकाग खत।

थ्व महामुद्रासिद्धिया बारे बांलाक च्वयात:गु दु । शिष्यपिन्त महामुद्रासिद्धि थुइके बिइत कनागु ख: । जिम्ह शिष्य अष्टमुनिया त:धंगु श्रद्धां छापय् याना: प्रदान या:गु ख: । इच्छा या:पिं शिष्यपिनि याकनं महामुद्रासिद्धि प्राप्त जुया: संबोधिज्ञान प्राप्त जुयेमा ।

हानं, थ्व सफू छापय्याना: प्रदान या:म्ह अष्टमुनिया नं संबोधिज्ञान प्राप्त जुयेमा । थ्व पुण्यद्वारा सर्वसत्त्व प्राणीपिनि जय जुयेमा, थ्व जिगु प्रणिधान जुल, शुभाय् ।

११२१ कछलाथ्व अष्टमी
(मुख:अष्टमी)

बद्रीरत्न बज्राचार्य
*मन्त्रसिद्धि महाविहार,*
*सवलबाहा:* ।



# महामुद्रा

यावन्तः सर्वसत्वाः सत्वसंग्रहेण संगृहीता
अण्डजावा जरायुजावा संस्वेदजावा उपपादुकावा
रूपिणोवा अरूपिणोवा संगिनोवा असंगिनोवा
नामसंगिनोवा नैवसंगिनोवा सर्वे ते सत्वा
मया महामुद्रा मन्त्रपदे प्रतिष्ठापयितव्या ॥

# अचिन्त्याद्वयक्रमोपदेशः

## कुद्दालपादविरचितः

### नमो वज्रसत्त्वाय

प्रज्ञाग्रगर्भसंभूतमचिन्त्यमद्वयं विभुम् ।
प्रणम्य लिख्यते सम्यग् भद्रपादक्रमागतम् ॥ १ ॥

प्रज्ञोपायमहागुह्यं करुणाचिन्त्यलक्षणम् ।
स्वयमुत्पद्यते ज्ञानं वाक्पथातीतगोचरम् ॥ २ ॥

न चासौ भावरूपेण स्वयम्भूरद्वयोत्तमम् ।
न चाभावेन दृश्यन्ते बोधिसत्त्वाः सवज्रिणः ॥ ३ ।

शाश्वतो च्छेदभेदेन (भेदो न) परमार्थोऽद्वयमुच्यते ।
भावना तु (न) स्वभावोऽयं नोपलम्भो न शून्यता ॥ ४ ॥

द्वयोर्विचार्यमाणेन ज्वलते ज्ञानमद्वयम् ।
अद्वयाकारसर्वं तु द्वयमेतन्न विद्यते ॥ ५ ॥

समं समरसाकारमचिन्त्यज्ञानमुत्तमम् ।
कल्पना ज्ञानयोगेन न भाव्यमद्वयोत्तमम् ॥ ६ ॥

निर्विकल्पमचिन्त्यं न प्राप्यते सुखवज्रिण:(णा) ।
उत्पत्ति: कल्पनाहेतुरनुत्पत्तिस्तथैव च ॥ ७ ॥

उभयाकाररहितं वास्यवासकवर्जितम् ।
वासनारहितं ज्ञानं भद्रपादक्रमागतम् ॥ ८ ॥

स्वयम्भूर्निस्तरङ्गं तु सर्वसङ्कल्पवर्जितम् ।
भावाभावस्वभावं तु वासनाद्वयबन्धनम् ॥ ९ ॥

निर्विकल्पस्वभावेन अचिन्त्यं न च च्छिद्यते ।
कल्पनामलजालेन चित्तरत्नं मलीकृतम् ॥ १० ॥

मलापगमनाद् बुद्धमद्वयं ज्ञानमुच्यते ।
निर्विकल्पा त्मकं सर्वं द्रष्टव्यं योगिभि: सदा ॥ ११ ॥

समाधिभावना ह्येषा भद्रपादेन देशिता ।
यस्य स्वभावो नोत्पत्तिर्विनाशो नैव विद्यते ॥ १२ ॥

तज्ज्ञानमद्वयं नाम सर्वसङ्कल्पवर्जितम् ।
कल्पना स्व(सु)समाख्याता बुद्धैर्वज्रधरादिभि: ॥ १३ ॥

निर्विकल्पार्थजनकं श्रीमहासुखवज्रिण (:) ।
बाह्याध्यात्मविकल्पेन सर्वलोका: समाश्रिता: ॥ १४ ॥

अद्वया(य)द्वयनिर्मुक्तं ज्ञानमुत्पद्यते स्वयम् ।
अभावे भावना नैव भावे च न च भावना ॥ १५ ॥

अलभ्यं सुखचैतन्य मचिन्त्यमद्वयं पदम् ।
सर्वसत्त्वेषु यश्चिन्त्यः प्रज्ञागर्भे व्यवस्थितः ॥ १६ ॥

करुणाप्रबोधबाणेन लक्ष्यं वेध्यं महासुखम् ।
सर्वशङ्काविनिर्मुक्तं निर्द्वन्द्वं परमं शिवम् ॥ १७ ॥

खसमं कल्पनामुक्तमद्वयं तु तदुच्यते ।
अचिन्त्यपदयोगेन सर्वभावान् विभावयेत् ॥ १८ ॥

कथितं भद्रपादेन धर्मपादक्रमागतम् ।
एकलोली स्वभावेन जगदाकारनिर्मितम् ॥ १९ ॥

श्रीमहासुखनाथेन अद्वयाकारभेदतः ।
शून्योपलम्भवादेन मिथ्यावादेन वाहिताः ॥ २० ॥

कल्पनाजड बन्धेन नैव बुद्धयन्ति श्रीसुखम् ।
दुष्कल्पकल्पना वान्या प्रज्ञोपायविशुद्धितः ॥ २१ ॥

महायोगाद्वयज्ञानमेकमेव महासुखम् ।
सर्व(र्वे) स्थिरचरा भावा अद्वयेन व्यवस्थिताः ॥ २२ ॥

स्वभावेनादिशुद्धान्ते शान्ताकाशे सुनिर्मला: ।
अद्वयान्ना(यं ना)ममात्रं तु तच्च नाम न विद्यते ॥ २३ ॥

वेद(द्य)वेदकनिर्लक्ष्यमद्वयं तु महासुखम् ।
न बुद्धो बुद्धिविषया(यो)अचिन्त्योऽयं स्वभावत: ॥ २४ ॥

तत्स्वभावं तु सर्वं वै चिन्तातीतं स्वयम्भुव: ।
सर्वे विकल्पजालेन नश्यन्ते प्राणिनो भुवि ॥ २५ ॥

अद्वयज्ञानमेकं तु सर्वसङ्कल्पवर्जितम् ।
यावन्नो शाश्व तोच्छेदो राशिद्वयं न विद्यते ॥ २६ ॥

मध्यमा नोपलब्धिस्तु अद्वयं ज्ञानमद्भुतम् ।
सर्वप्रपञ्चरहितमाकाशमिव निर्मलम् ॥ २७ ॥

कल्पनाजालविच्छिन्नमचिन्त्याद्वयमुत्तमम् ।
अद्वयरसविद्धेन काष्ठपाषाणमृण्मया: ॥ २८ ॥

देवताकारतां यान्ति भद्रापादेन देशितम् ।
प्रज्ञोपायमहाकरुणासमरसाकारमेकत: ॥ २९ ॥

तस्मिन् निष्पद्यते ज्ञानमद्वयं तु महासुखम् ।
रूपशब्दरसातीतं गन्धस्पर्शादिवर्जितम् ॥ ३० ॥

धर्मधातुमयं शुद्ध(मद्वयं) ज्ञानमुत्तमम् ।
सर्वसङ्कल्पनिर्मुक्तं ग्राह्यग्राहकवर्जितम् ॥ ३१ ॥

स्वभावशुद्धं निलयमद्वयं पारमार्थिकम् ॥
अविनाशमनुत्पत्तिमनक्षर मनालयम् ॥ ३२ ॥

महा मुद्रेयमत्यन्तमद्वयं ज्ञानमुत्तमम् ।
दोषाणां च गुणानां च चित्तमाराध(धार)मुच्यते ॥ ३३ ॥

तस्मिन् व्याप्तिपरं ज्ञानं निस्तरङ्गं स्वभावतः ।
स्वयमुत्पद्यते ज्ञानं न किञ्चिदपि भावयेत् ॥ ३४ ॥

यस्मादचिन्त्यधर्मोऽयं बुद्धानामद्वयं पदम् ।
सुनिर्मलं महाशुद्धं भाव्यभावकवर्जितम् ॥ ३५ ॥

अविकल्पेन सर्वं वै दृश्यते श्रीसुखोदयम् ।
अनेकदेवतारूपं वज्रसत्त्वादिविग्रहम् ॥ ३६ ॥

बुद्धबिम्बं च सकलं योगिनीगणमण्डलम् ।
क्रोधराजसमस्तं वा विद्यादेवी तथैव च ॥ ३७ ॥

दिव्यमण्डलचक्रं तु आलोकाकारनिर्मलम् ।
सूत्रान्त(न्तं) विनयोपेतं तथा पारमितानयम् ॥ ३८ ॥

मन्त्रमुद्रास्तथा विद्या हृदये चोदनं तथा ।
मन्त्रवादमशेषं वै मण्डलं होमकर्म च ॥ ३९ ॥

जपपूजाविधानं च स्वयमुत्पद्यते क्रमात् ।
दर्शनं शैवं सौरं च अर्हन्तं वैष्णवं तथा ॥ ४० ॥

वेदप्रमाणवाक्यं च स्वयमुत्पद्यते परम् ।
सर्वज्ञपद योगोऽयमचिन्त्यं निर्विकल्पकम् ॥ ४१ ॥

दिव्यं समन्तभद्राख्यं चिन्तामणिरिवाद्वयम् ।
पातालखड्गगुटिकायक्षिणीपादुसंघटम् ॥ ४२ ॥

रसाञ्जनं च दिव्यं च स्वयं सिद्धयन्ति नान्यथा ।
अविकल्पाधिमोक्षेण सर्वमुत्पद्यते स्वयम् ॥ ४३ ॥

भावं न भावयेन्मन्त्री स्व(अ)भावं नैव भावयेत् ।
किं तस्य भण्यते बुद्धो न शिवो विष्णुरर्हतः ॥ ४४ ॥

न तस्य विद्यते नाम न रूपं वर्णलक्षणम् ।
मायाकारधरं दिव्यं स्कन्धं प्रकृतिनिर्मलम् ॥ ४५ ॥

प्रकृति प्रभास्वराकारं नित्यानन्दसुखोदयम् ।
कायवाक्चित्तरहितं दर्पणं जालपुञ्जकम् ॥ ४६ ॥

परमानन्दसुखाकारं नित्योदितमहासुखम् ।
देशनापदयोगेन नामवर्ण प्रभाषणम् ॥ ४७ ॥

अन्यथा वाक्पथातीतं कथितुं नैव पार्यते ।
क्रियान्त(तो) नयरूपेण इष्टार्थं तव लीलया ॥ ४८ ॥

पूजारहस्यकालं तु भद्रपादेन देशितम् ।
ज्ञानेनाद्वयभूतेन एकाकारस्वभावतः ॥ ४९ ॥

वासना क्षयतां याति बुद्धत्वं प्राप्यते ध्रुवम् ।
नानावर्णप्रभेदेन नानादर्शनयोगतः ॥ ५० ॥

वासनामलसिक्तेन अद्वयं नैव बुद्ध्यते ।
आदिमध्यान्तरहितं निष्पन्नोत्पत्तिवर्जितम् ॥ ५१ ॥

त्यक्तं चित्तं(च) चैतन्यं तदद्वयज्ञानमुत्तमम् ।
अद्वयो नाम बुद्धस्य भद्रपादेन देशितः ॥ ५२ ॥

तद्बुद्धवेदनाद् बुद्धो स भवेत् साधकोत्तमः ।
देशनापदयोगेन बुद्धः अद्वयकल्पितः ॥ ५३ ॥

परमार्थभेदरूपेण न बुद्धो नापि चाद्वयम् ।
उदिते ज्ञानसद्भावे कल्पनामलदूरतः ॥ ५४ ॥

तत्वात् परोक्षतां याति सर्वभावाविकल्पताम् ।
भद्रपादप्रसादेन श्रवणाभ्यासयोगतः ॥ ५५ ॥

अद्वयं नाम गृह्णामि क्षन्तव्यं मम योगिभिः ।
वासनाक्षय(:) कर्तव्या(व्यो) यत्नेनापि विपश्चितै:(ता) ॥५६॥

अन्यथा न च बुद्धत्वं कल्पासंख्येयकोटिभिः ।
ज्ञानेनाद्वयनाथेन वासना क्रियते क्षयः ॥ ५७ ॥

वासनाक्षयजातेन ह्यद्वयो बुद्ध उच्यते ।
वासनारहितावस्थे पुरुषेऽधममध्यमाः ॥ ५८ ॥

बुद्धस्तु(द्धत्वं) भण्यते तस्य न पक्षोऽप्यत्र विद्यते ।
निःस्वभाव स्वरूपेण प्रज्ञाभागस्तु संस्थितः ॥ ५९ ॥

तयोरालम्ब (मेल) नादेकं समर साकारयोगतः ।
भद्रपादेन देशितमिदमद्वयमुत्तमम् ॥ ६० ॥

न कथाभावना चिन्त्या परमानन्दरूपिणी ।
भद्रेण भद्रं कथितं बुद्धत्व प्राप्तिकारणम् ॥ ६१ ॥

उपमा सर्वधर्मेषु दातुं नैव च पार्यते ।
चक्षुरादिमनो ज्ञानं दृष्टान्तभाववर्जितम् ॥ ६२ ॥

एक एव अनाद्योऽसौ अनन्ताकारसंस्थित: ।
ज्ञायते परमेकेन गुरुपादप्रसादत: ॥ ६३ ॥

योग(:) पुरुष आख्यात: अनुयोगस्तु संवृति: ।
महायोगाद्वयज्ञाने बुद्धत्वं यान्ति योगिन: ॥ ६४ ॥

चन्द्रसूर्यो परागेषु प्रज्ञावज्र प्रयोगत: ।
विलीने अद्वयज्ञाने बुद्धत्वमिह जन्मनि ॥ ६५ ॥

परार्थानन्दयोगोऽसौ ग्राह्यग्राहकवर्जित: ।
सिद्धरूपमसन्दिग्धं करुणाद्वयमुत्तमम् ॥ ६६ ॥

चक्षुर्भ्यां दृश्यते यच्च रूपं धर्मं च मध्यमम् ।
परमानन्दरूपेण द्रष्टव्यमद्वयोत्तमम् ॥ ६७ ॥

श्रोत्रैश्च श्रूयते यच्च यच्च शब्दविभागत: ।
शब्दातीतं परं ज्ञानं श्रवणमद्वयोत्तमम् ॥ ६८ ॥

जिह्वा चास्वा(स्व)दते यच्च विरसा रसमुत्तम: (मम्) ।
षड्रसमेकभावेन बोद्धव्यमद्वयोत्तमम् ॥ ६९ ॥

घ्राणश्च गन्धविज्ञाने मृगमदाद्यसु(शु) चिस्मृति: ।
एकल्लोलीस्वभावेन ज्ञायते चाद्वयोत्तमम् ॥ ७० ॥

कायस्पर्शस्वभावेन जात्यजातिविभागतः ।
प्रज्ञोपाय वियोगेन निष्पन्नमद्वयोत्तमम् ॥ ७१ ॥

अनन्तं व्यापकं सर्वं ज्ञानालोकप्रभावतः ।
स्वच्छन्दपरमानन्दमद्वया(यं) बुद्धसत्सुखम् ॥ ७२ ॥

संस्कार (रो) वेदना संज्ञा रूपं विज्ञानमेव च ।
पञ्चज्ञानमयं (यः) कायः पञ्चबुद्धोऽद्वयोत्तमः ॥ ७३ ॥

शाश्वताक्षोभ्यरत्नायुरमोघस्तु तथैव च ।
पञ्चमेकमयं पिण्डं षष्ठमस्तु महासुखः ॥ ७४ ॥

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्चभूतमहोत्पत्तिर्भवेद् वै बोधिरद्वयः ॥ ७५ ॥

आदर्शसमताकृत्यानुष्ठान प्रत्यवेक्षाधर्मधातुभिः ।
विकल्पाः कल्पनारूपाः स्वयम्भू रेकमद्वयः ॥ ७६ ॥

दर्शनादेर्विभावेन सत्त्वाशयवसे(शे)न तु ।
शैवादिवैष्णवा ब्रह्मा सर्वज्ञ एकोऽद्वयः ॥ ७७ ॥

चक्षुरादि(दे) [र] वैकल्यं मनसातीतगोचरम् ।
परमार्थोऽद्वयो नाम वाक्प्रपञ्चस्तु संवृत्तिः ॥ ७८ ॥

परमार्थावस्थभेदे(न) न बुद्धो नापि चाद्वय: ।
कल्पनाकाशयोगेन वाक्प्रपञ्चस्तु कथ्यते ॥ ७९ ॥

सर्वशास्त्रानुक्रमतो व्याख्यानोक्तिविभागत: ।
अन्यथा कथितुं नैव शक्यते बुद्धमद्वयम् ॥ ८० ॥

शृता(:) षोडश आख्याता(:) प्रज्ञास्तु(दि) दश कल्पिता: ।
बुद्धाश्च पञ्च संख्याता अद्वयश्च षडावृति: ॥ ८१ ॥

दर्पणा लोकबिम्बेषु यथा सर्वं प्रदृश्यते ।
तथैवाद्वयज्ञानेऽस्मिन् बुद्धबोधि रचिन्तितम ॥ ८२ ॥

त्रैधातुकेषु सर्वेषु उत्पत्तिस्थितिहेतुभि: ।
तत्सर्वमद्वयज्ञान उद्भूता: सर्वजन्तव: ॥ ८३ ॥

सागरा: पर्वता वृक्षास्तृणगुल्मलताश्च ये ।
विनि:सृता अद्वयज्ञान(ाद्) भ्रान्तिरत्र न विद्यते ॥ ८४ ॥

माता पिता च एकत्र द्वयमेतन्न विद्यते ।
अद्वयज्ञानसद्भावे सर्वमुत्पद्यते परम् ॥ ८५ ॥

एतेनोपाययोगेन प्रज्ञाद्वयस्वभावत: ।
बुद्धत्वं लभ्यते सद्यो जन्मनीहैव योगिन:(ना) ॥ ८६ ॥

भद्रपादेन कथितं कर्णात् कर्ण मुखान्मुखम् ।
अनेकोपाययोगेन भद्रपादप्रसादतः ॥ ८७ ॥

भावनाचिन्त्ययोगेन बुद्धयते(द्धत्वं) प्राप्यते ध्रुवम् ।
परमाश्व(ो) वीणापाद इन्द्रभूतिः सलक्ष्मिभिः ॥ ८८ ॥

विलासवज्र(ज्रो) गुण्डेरी पद्माचार्य(र्यो) महाकृपः ।
धर्मपादस्य क्रमतो भद्रपादक्रमागताः ॥ ८९ ॥

एकोऽभिप्रायः सर्वेषामद्वयज्ञानमुत्तमम् ।
मन्त्रवादमशेषं च तथा पारमितानयः ॥ ९० ॥

सूत्रान्तपिटकादिभ्योऽत्रैकाद्वयमहासुखम् ।
अर्हन्तसौरशैवाद्याः सोमसिद्धान्त एव च ॥ ९१ ॥

वैष्णवो मानवो धर्मो अद्वयेन तु देशिताः ।
नास्ति चाद्वयवाक् तेन देवासुरनराधमाः ॥ ९२ ॥

सर्व तु चाद्वयज्ञानं दृश्यते प्रतिभाष(स)तः ।
अद्वयं(यः) करुणामिश्रः प्रज्ञोपायसमन्वितः ॥ ९३ ॥

शून्यताभेदभिन्नस्तु सर्वबुद्धमयो गुरुः ।
भद्रपादमतं ह्येतज्ज्ञानसागरमुत्तमम् ॥ ९४ ॥

क्षीरोदमथनाकार सर्वमुत्पद्यते परम् ।
ब्रह्मा(ह्म) विष्णुमहेश्वरबुद्धाद्या ये च कीर्तिता: ॥९५॥

सोमसूर्यसताराश्च ज्ञानसागरसम्भवा: ।
लक्ष्मी: सरस्वती चैव अमृतं रसमुत्तमम् ॥ ९६ ॥

अमृतादुत्थितं सर्वं सदेवासुरमानुषम् ।
त्रयोदशी च विख्याता भूमिर्वज्रधरी शुभा ॥ ९७ ॥

त्रिकोणाकारसम्भूता धर्मोदय इति स्मृता ।
चन्द्रार्कवारिसम्पूर्णा प्रज्ञारूपा महोज्ज्वला ॥ ९८ ॥

सुखात् सर्वमहासौख्या बुद्धत्वावाप्तिकारिणी ।
कोटिपत्रं महापद्मं तत्र मध्ये व्यवस्थितम् ॥ ९९ ॥

सदा सकेसराद्यन्त(न्तै)र्वाऽऽलिकालिसमन्वितै: ।
चन्द्रसूर्यपटाच्छि(च्छ)न्नं नवप्रज्ञासमन्वितम् ॥ १०० ॥

श्र(स्र)वन्तं ज्वलनाकारं बिन्दुचन्द्रोदयं परम् ।
आनन्दजनकं दिव्यमशेषार्थफलप्रदम् ॥ १०१ ॥

स्वच्छामृतसमं पूर्णं मणिरत्नसमन्वितम् ।
अपर्यन्तगुणाधारं स्थानं श्रीसुक(ख)वज्रिणम्(ण:) ॥१०२॥

सर्वमाल्हादकरणी सृष्टिसंहारकारिणी ।
अनेकदेवतारूपं सागराद्वयसंभवम् ॥ १०३ ॥

धर्मसंभोगरूपं तु निर्माण कायमेव च ।
अनेकसर्वसत्त्वार्थधर्मचक्रप्रवर्तकम् ॥ १०४ ॥

दशदिशानन्तपर्यन्तं लोकधातुः समन्ततः ।
दशज्ञानबलोपेतं प्रज्ञाप्रधानमुत्तमम् ॥ १०५ ॥

ख(धातुगं) ध्रुवं पद्ममार्गं मद्रक्रमागतम् ।
गर्भपद्मं नाभिपद्मं (च) कण्ठपद्मं तथैव च ॥ १०६ ॥

षष्टिकायानि पद्मं च तिर्यग्द्वारे व्यवस्थितम् ।
पश्यन्ति प्रतिश्रवणं वेदनैश्च सुसंस्थिताः ॥ १०७ ॥

विण्मूत्रशुक्रसंचारनवद्वारेषु संगतिः ।
विष(स)तन्तुसमाकारा अध ऊर्ध्वं व्यवस्थिता ॥ १०८ ॥

प्रज्ञानामेति विख्याता सर्वबुद्धैस्तु मातरः ।
तत्र मध्ये स्थितो देवः परमेश्वरमद्वयम् ॥ १०९ ॥

क्रीडते त्रिषु पद्मेषु सर्वज्ञस्तु महासुखम् ।
अग्निवारुणमाहेन्द्रवायुना समलङ्कृता(तम्) ॥ ११० ॥

भ्राम्यमानं(ण) शनैर्मुक्त्वा(क्त्या) त्रिषु पद्येषु नीयते ।
घण्टिकाच्छिद्रमार्गेण नासापुटप्रयोगतः ॥ १११ ॥

नालिकावज्रविवरे बुद्ध(ध्य)मानस्तु चाद्वयः ।
चक्रेण विकल्पेशं(लां) शस्तु विश्राम्य घण्टिकाग्रतः ॥११२॥

अमृतपानं कुर्वीत कलबिन्द्वाप्रयोगतः ।
ततस्तु जायते कायः शुद्ध(:) प्रकृतिनिर्मलः ॥ ११३ ॥

दिव्यप्रज्ञा म(ा)नवी च जरामृत्युविनाशकृत् ।
योगाग्रं महाचारेन कथितो मम लीलया ॥ ११४ ॥

सर्वाधिरमृतं नाम सत्यं सत्यं न संशयः ।
नासानिःश्वासभेदेन हकारस्तु अनाहतः ॥ ११५ ॥

घण्टिकाभे(च्छे)दमार्गेषु द्वात्रिंशन्नाड्यो मताः ।
द्वात्रिंशद्देशनाः प्रोक्ता अकलकल(ला) अद्वयाः ॥ ११६ ॥

नासानिःश्वासभेदेन ककारस्तु अनाहतः ।
घण्टिकारन्ध्रमार्गेण नीत्वा मार्गपथं ध्रुवम् ॥ ११७ ॥

तत्र द्वारे तु विश्राम्य शुद्धाकारं प्रभास्वरम् ।
अनाहतख्यो नाम श्रीसुखाकारसंस्थितः ॥ ११८ ॥

ततस्तु प्रेरयेद् वायुं माहेन्द्र मुपनीयते ।
स्फुटते ध्रुवमार्गं तु परमेश्वर मनाहतः ॥ ११९ ॥

भूमि त्रयोदशी प्राप्तः सुखश्च(काय) इवापरः ।
अनादिसिद्धिरूपस्तु धर्मचक्रप्रवर्तकः ॥ १२० ॥

भद्रपादस्य आम्नाय(:) निबन्धो(द्धो)ऽल्पकस्तथा ।
यच्छ्रुतमवधारितं तद्भावनाश्रुतचिन्तया ॥ १२१ ॥

भद्रपादप्रसादेन श्रवणाभ्यासयोगतः ।
कुद्दालनाम(मा) कुशली तेन संग्रथितो ह्ययम् ॥ १२२ ॥

भद्रपादस्य दासोऽह मन्येषामाचार्ययोगिनाम् ।
सत्त्वानाम(प्य)शेषाणां भवेयं जन्मजन्मनि ॥ १२३ ॥

अनेनाशय द्वारेण यदि बुद्धो भवाम्यहम् ।
अथवा नरकं यामि नरक एव सुखावती ॥ १२४ ॥

इति लिखितं विमलगुरुक्रम(मे)ण(ा)न्तयोगं बृहद्गुणाशेषमन्त्रसद्भावमतं च सम्भूतमचिन्त्याद्वयभागस्तु उत्पन्नक्रमो योगमाम्नायो नीतिगर्भविवतारूपात्मनः स्मरणार्थमस्मज्जनजड सन्त (स्वल्प) बुद्धीनाम् ॥

इत्यचिन्त्याद्वयक्रमोपदेशः समाप्तः ॥
कृतिरियं महामुद्रासिद्ध श्रीकुद्दालपादानामिति ॥

